सिद्धांतरीत्या भास्करमतानुसारेणोक्तमुपाधिकृतानेकात्मवादमिति । तन्मते आत्मभेदस्यौपाधिकत्वात् । संवृत्यावच्छिन्न-मेव नानापुद्गलशब्दितामिति संबंधः । न तु स्वभावत इत्यत्र हेतुः संवृतेरिति । तत्कृतावच्छेदानां संवृतिकृतभेदानां । भास्करमत इव सत्योपाधिकृतसत्यभेदवादो नाभ्युपगत इति भावः । शब्दितमित्येतदनूद्य व्याख्याति ॥ इत्युक्तमिति। अध्याहार्यमाह ॥ भवतीति शेष इति । ॥ एषा प्रक्रियेति । तच्चित्सुखादिकमित्युक्ता यद्यपीत्यादिनोक्ता च प्रक्रियेत्यर्थः ॥ तत्कथमिति । तथा चैषा प्रक्रिया समानेत्युक्तमयुक्तमिति भावः । ननु प्राभाकरेणातत्त्वावेवेदकस्य प्रामाण्यमंगीकृतमेव । अनुभूतिः प्रमाणमिति प्रमाणलक्षणे तद्व्यावर्तकविशेषणादानादित्यत आह ॥ अनुभूतिः प्रमेति ॥ अतत्त्वावेदकाभावाभिमानेनेति । अयथार्थज्ञानमेव नास्तीत्याभिमानेनेत्यर्थः । भ्रांतिहेतुः । वेदस्य । तेषामपि । आकाशे नैल्यादिज्ञानानामपि । अविशेषात् अल्पकालानिवर्त्यभ्रांतिहेतुत्वाविशेषात् ॥ ब्रह्मज्ञानेति । वेदस्य ब्रह्मज्ञाननिवर्त्यविषयकत्वादाकाशनैल्यादिज्ञानस्य तदभावादित्यर्थः ॥ न त्वल्पकालेनेति । येन तेषामपि प्रामाण्यसंकेतः कार्यः स्यादिति भावः ॥ अस्यैवार्थस्येति । अल्पकालानिवर्त्यभ्रांतिहेतुत्वरूपार्थस्यैवेत्यर्थः ॥ अन्यथेति । अल्पकालानिवर्त्यभ्रांतिहेतोः प्रामाण्यानंगीकार इत्यर्थः । नागशब्दात्कुंजरं । नगशब्दाद्गिरिं । भ्रांता न भवंति खल्वित्यन्वयः । वर्णदैर्घ्यादिकं आकाशनैल्यादिवदारोपितं । उदाहरेत् अर्थप्रमापकत्वेन स्वग्रंथे पर इति शेषः । तथाच नाग इत्यादिशब्दादर्थभेदं प्रतिपद्यमाना भ्रांता न भवंतीत्युक्त्या वर्णदैर्घ्यादेर्ब्रह्मज्ञानात्प्रागबाध्यातयाऽल्पका-

लानिवर्त्यभ्रांतिहेतोर्वर्णदैर्घ्यादिज्ञानस्यातत्त्वावेदकत्वलक्षणं प्रामाण्यमंगीकृतमिति ज्ञायते । भ्रांता न भवंतीत्येतदेव प्रकृतप्रामाण्यसाधकं। तथाच तलनैल्यादिज्ञानस्यापि प्रामाण्यसंकेतः कार्य इति भावः। अविसंवादः शून्यवादिनाऽपीति। अविसंवादिविज्ञानं प्रमाणमिति सौगता इति वचनादिति भावः ॥ सत्वेतीति । तथाच सत्त्वादिधर्माणां विशेषाणामभाव उभयोः संमत इत्यनेन निर्विशेषत्वांगीकारः प्रदर्शित इति द्रष्टव्यं ॥ सत्वमपीति । निर्विशेषत्वांगीकारवत्सत्वानंदत्वज्ञानत्वांगीकारोप्युभयोः संमत इति वक्तुमादौ तत्त्वस्य सत्वं शून्यवादिनांऽगीक्रियत इत्याशयेन शून्यं नामासत्तस्य कथं सत्वं शून्यवादिनांऽगीक्रियत इत्याशंकां परिहर्तुमाहेत्यर्थः। सद्विरोधित्वमत्यंतासत्वं । आधारत्वात् अधर्माधिकरणत्वादित्यर्थः । न स्यात्मैवेति । येन कारणीभूतस्यात्मनो नाशोऽपेक्षितः स्यादिति भावः। जागरे शरीराद्यभिमानसद्भावदशायामित्यर्थः। सुप्तौ शरीराद्यभिमानाभावदशायामिति यावदित्यर्थः ॥ विनिगमनमिति । देहेंद्रियादिरूपसामग्रीवैकल्येनैव दुःखानुत्पादादनात्मनाशेनेत्यत्र किं विनिगमनमित्यर्थः ॥अत्यंतेति। तथाच न तन्नाशेन दुःखहानिरेष्टव्येत्यर्थः । विप्रकृष्टं बहिष्ठं धनादि। संनिकृष्टं अंतर्निक्षिप्तं धनादि । एवमत्रापि विप्रकृष्टं देहादि । तस्य भावस्तत्वम् । तथा च भावार्थप्रतियोगित्वमभावत्वमित्यर्थः ॥ नष्ट आत्मा घटश्चेति । नाशसमानकालीन आत्मा नाशसमानकालीनो घटश्चेत्यर्थः ॥ अप्रामाणिकावेति । ध्वंससमानकालीनप्रतियोगिनोऽप्रामाणिकत्वादित्यर्थः ॥ अनुज्ञयेति । जीवस्य ब्रह्मत्वं नाम अविद्याकामकर्मादिबद्धस्य परमानंदभोक्तृत्वमित्युक्तं स्यात् । तच्चास्माकमिष्टमेव । अविद्यापगमानंतरं जीवस्य तथाभावांगी-

कारादिति भावः ॥ मा न भूवमिति । अहं निराकाररूपं माभूवमिति न । मम निराकाररूपत्वं मास्त्विति नेति यावत् । किंतु भूयासं निराकाररूपमेव भूयासमिति लोको न ह्याशास्त इत्यर्थः । चक्षुषी निमिल्येत्यादि तुष्णीं तथा वदत इत्यर्थः । प्रतिमल्लः प्रतिवादी । यद्वा इदानीमहमिति परमप्रेमास्पदतयाऽनुभूयमानं यद्रूपं तन्मा भूवं एतद्रूपं त्यक्ष्ये इति न । किंतु भूयासमित्यमेव सर्वदा भूयासमित्येवाशास्त इति प्रसिद्धं । निराकाररूपमनुसंधायेत्थमाशास्त इति न हीत्यर्थः ॥ संवलित रूप इति । परमप्रेमास्पदतया आशास्यमानेऽहमिति चिदचित्संवलिते रूपे निराकारं रूपम- स्त्येवेत्यर्थः । अतो निराकाररूपं भूयासमित्याशीर्युक्तेति भावः । तस्य निराकाररूपस्य । ॥ अन्यस्येति । यदा मा न भूवं भूयासमित्याशासानकर्तृसाकारं तस्य निराकाररूपभवने कथमाशासा स्यात् । कुत इति चेत् । अन्यस्यान्य- स्मिन्निरुपाधिकप्रेमोत्पत्तेरसंभवादित्यर्थः ॥ स हि तस्यापीति । आत्मन इत्यर्थः । तन्नाशेन देहेंद्रियादिनाशेन । परमेष्टं अप्राकृतस्वरूपानंदाविर्भावः । अल्पेष्टं प्राकृतदेहादि ॥ उक्तमेवेति । न च दुःखविरोधित्वादन्या ह्यानंदतेष्यत इत्युक्तमित्यर्थः । अनुभूयासमिति । आनंदानुभववान् भूयासमित्यर्थः । द्रविणवत्वे हि पारिव्रढ्यं न तु द्रविणत्व इतिवदिति भावः । नन्वानंदानुभव एव पुरुषार्थ इत्येवोच्यत इति चेत्तत्राह ॥ न चेति । आनंदस्यानुभवविषयत्व- मित्यर्थः । प्रतीयते प्रतीतिविषयो भवति । प्रत्येति प्रतीतिमान्भवति ॥ भावशब्द इति । अभावशब्दांतर्गतो भावशब्द इत्यर्थः । तथाच भवतीति भावः सन् न भवतीत्यभावोऽसन् शून्यमित्यर्थः । निवृत्तिर्ध्वंसः ॥ यथोक्त-

मिति । आत्मने दुःखनिवृत्त्युपयोगित्वमुक्तमित्यर्थः । तैर्देहादिभिर्विना केवल आत्मा दुःखहेतुर्न चेत्तर्हि ते देहादन्येऽपि तादृशाः केवला न दुःखहेतवः । किंत्वात्मसहिताः । एवमात्मनो दुःखहेतुत्वं देहादेश्च दुःखहेतुत्वमिति पक्षद्वयमपि निर्दोषं ततः कारणात् द्वयोर्देहविषये आत्मविषये च वैराग्यं संपाद्यं तन्नाशः संपाद्य इति यावदित्यर्थः ॥अदेहत्वादिति। देहशून्यत्वादित्यर्थः । ननु ब्रह्म वेद ब्रह्म भवतीत्यादि श्रुतिरेव मदभिमतमोक्षवादिनी भविष्यति। अतस्तदभिमतमोक्षवादिनी श्रुतिर्नास्तीत्यपि ग्राह्यमिति यदुक्तं तदसदित्यत आह ॥ एवं ब्रह्म वेदेति । ॥ व्याख्यातव्येति । ब्रह्म पूर्णं वेद चेत्स्वयमपि योग्यतानुसारेण पूर्णो भवतीति व्याख्यातव्येत्यर्थः ॥ न चाशरीरस्येति । इंद्रियाणां शरीरसंयुक्तत्वेन तदभावे तेषामप्यभावेन भोगासंभवादिति भावः ॥ परकीयानुमानस्येति । आत्मशून्यता पुरुषार्थः दुःखनिवृत्त्युपयोगित्वाच्छरीरादिशून्यतावदित्यनुमानस्येत्यर्थः । परकीयानुमाने आत्मनो निर्दुःखतां प्रति हेतुत्वमुपाधिरित्याह ॥ शरीरादिशून्यतामपीति । दृष्टांतीकृतेत्यर्थः ॥ दुःखध्वंसेति । आत्माविशेषितकेवलदुःखध्वंसमात्रोपयोगित्वादित्यर्थः । तदुभयमुपपादयति ॥ न हि दुःखमिति ॥ निर्दुःखः स्यामिति । शरीरहानेनेत्यर्थः । अत्र स्यामित्युत्तमपुरुषेणात्मनो भानादिति भावः । तथाच शरीरादिशून्यतायां पुरुषार्थत्वस्यात्मनो निर्दुःखतां प्रति हेतुत्वाभावादिति साधनाव्यापकत्वं द्रष्टव्यमिति स्पष्टत्वान्नोक्तं । अस्मदुक्त प्रतिपक्षत्रये दूषणमाशंकते ॥ ननु शून्यभाव इति। शून्यभावो ब्रह्मभावो वा न मोक्षः । अदेहत्वादित्याद्यनुमाने पक्षीभूत इत्यर्थः । सममेतत्तवा-

पीत्याह ॥ परानुमान इति । शून्यभावो ब्रह्मभावो वा पुरुषार्थ इत्यनुमानेऽपीत्यर्थः ॥असिद्धत्वेनेति । पक्षीभूतायाः आत्मशून्यतायाः ब्रह्मभावस्य वा अस्मान्प्रत्यसिद्धत्वेनेत्यर्थः । स्थापनानुमाने आश्रयस्योभयसिद्धत्वमपेक्षितं । प्रतिपक्षानुमाने तु परप्रसिद्धिरेवातस्तत्रैवाश्रयासिद्ध्यादिर्न तु प्रतिपक्षकर्तृणामस्माकमित्याशयेनाह ॥ इयांस्त्विति ॥ परंज्योतिरिति । परंज्योतिःशब्दवाच्यनिर्गुणब्रह्मसंपत्तिरूपपरममुक्तिमत एव स्वरूपाविर्भावेनैव जक्षन्नित्यादिना भोगोक्तेः । सगुणविशेषत्वांगीकारे तद्विरोधादित्यर्थः । आत्मस्वरूपस्य परमेष्टत्वेन तन्नाशस्य पुरुषेणाप्रार्थ्यत्वादिति भावः । भेदे सद्वैतत्वैव स्यादित्येतदयुक्तमित्याशंकते ॥ अथेति । सतः सत्यभूताद्दुःखादित्यर्थः । ननु बहुजीववादिमते एकस्य मुक्तिदशायामन्येषां दुःखसद्भावेन दुःखप्रतियोगिकभेदसद्भावात्तं प्रतिमोक्षः स्वप्रतियोगिकभेदराहितत्वादित्यंतिमानुमाने स्वरूपासिद्धिरित्यत आह ॥ बहुजीववादिनं प्रतीति । पूर्वकौ शून्यवादिमायावादिनौ । कश्चिद्विशेषो भंगुरत्वादिरूपः । पूर्वाभ्यां शून्यवादिमायावादिभ्यां ॥ स्पष्ट एवेति । अहमिति परमप्रेमास्पदतया साक्षिणाऽनुभूयमानाकारापगमस्य तेनाप्यंगीकारेण तन्नाशस्यापुरुषार्थत्वमेवेत्यादिदूषणप्रकारातिदेशः । तथोक्तरूपे मोक्षेऽनुमानविरोधातिदेशश्च स्पष्ट इत्यर्थः । वर्तमानकालस्यापि केवलज्ञानित्वोपपादनार्थमुक्तं ज्ञानातिरिक्तस्य कल्पितत्वादिति । तथाच साध्यवैकल्यमिति भावः । विशेषः संसारान्मुक्तेर्व्यावहारिकद्वितीयाभावरूपः ॥ तदभाव इति । तथा कालो व्यावहारिकद्वितीयाभाववान्नेति साध्यत इत्यर्थः । शंकते ॥ ज्ञानव्यतिरिक्तमिति । साध्यधर्मस्याश्रयासिद्धौ चोदितायामवस्था

आश्रयतां व्रजेदिति वक्तव्यं न तु पक्षतामिति। साध्यविशिष्टधर्मिण एव पक्षत्वादित्यत आह ॥ पक्षशब्देनेति। तर्हि वर्तमानकालरूपे दृष्टांते साधनवैकल्यमित्यत आह ॥ संसारावस्थैवेति ॥ अनुमानांतरेति। अवस्थापक्षकेत्यर्थः । ननु प्रतिज्ञाऽन्या भवतां निग्रहस्तावत्प्राप्तस्तन्मात्रेण मदीयं मोक्षतत्त्वं व्यवतिष्ठत इति चेत्तत्राह ॥ न हीति। प्रतिवादिनिग्रहमात्रेण विरुद्धं तत्त्वं न व्यवतिष्ठत इत्येतावन्मात्रे दृष्टांतमाह ॥ मा हि भूदिति। न हि भवतीत्यर्थः ॥ कस्मिंश्चिदिति। नित्यशब्दः कृतकत्वादिति वादिना प्रयुक्ते विरुद्धत्वमनैकांत्यं वेति दूषणद्वये प्रतिवादिनोक्ते वादिना दूषणाधिक्यं नाम निग्रहस्थानमिति प्रतिवादिनि निगृहीते सति तन्मात्रेण नित्यत्वानुमानस्य समीचीनत्वप्राप्त्या तेन नित्यत्वरूपं प्रमेयं न सिद्ध्यति। आधिक्येनानैकांतिकत्वपरित्यागेऽपि विरुद्धत्वेन दुष्टत्वात्। एवं वाद्युक्ते मोक्षे कालपक्षकानुमानेन प्रतिवादिना दूषिते तस्मिन्नाश्रयासिद्ध्या दूषिते तत्परित्यागेनावस्थापक्षकानुमानकरणे प्रतिज्ञाहानिरूपनिग्रहस्थानप्राप्तौ सत्यां प्रतिवादिभूतास्मन्निग्रहमात्रेण त्वदीयं मोक्षतत्त्वं न सिद्ध्यति। अवस्थापक्षकानुमानविरोधस्यापरिहार्यत्वादित्यर्थः। दूषणद्वयस्यासमीचीनत्वे आधिक्येन प्रतिवादिनि निगृहीते प्रथमदूषणदूषितत्वेनानुमानस्यासमीचीनत्वं वक्तुं न शक्यते। तस्य दूषणस्यासमीचीनत्वात्। अतः सद्दूषणद्वयेनेत्युक्तं ॥ एवं तर्हीति। कालाधिकरणत्वेन कालनिषेधस्य कर्तुमशक्यत्वे सतीत्यर्थः ॥ सामान्येति। कालो नास्तीति सामान्यनिषेध एवेत्यर्थः ॥ पूर्वोत्तरकोटीति । कोटिरवधिः । एतदारभ्यैतावत्पर्यंतमस्तीत्येवं पूर्वोत्तरावधिरहिततयेत्यर्थः ॥ पूर्वाभ्यां सहेति ।

शून्यवादिमायावादिभ्यां सह विद्यमानस्य विज्ञानवादिनश्चेति त्रयाणामित्यर्थः ॥ शून्यमायावादिनोः बहुजीववादिनोरित्यर्थः । एकजीववादिभ्यां शून्यवादिमायावादिप्रभेदाभ्यां ॥ अतिदेशः कृत इति । समश्चायामित्यनेनेत्यर्थः ॥ स्पष्टीकरणायेति । विमतशब्देनैव मोक्षकालस्य प्राप्तत्वादित्यर्थः । द्वयोः पूर्वानुमानैतदनुमानयोः ॥ निषेधमुखेनेति । कालः केवलज्ञानवान्नेति निषेधमुखेनेत्यर्थः ॥ विधिमुखेनेति । विमतः कालः प्रपंचवानिति विधिमुखेनेत्यर्थः ॥ पक्षस्तावदिति । सिद्धांत इत्यर्थः ॥ अनुमानं त्विति । यद्यदनुविद्धतया प्रतीयते तत्तत्रारोरोपितमित्येवं कालावयवारोपिततत्त्वसाधकानुमानमित्यर्थः ॥ प्रत्यक्षविरोधादिनेति । सन्घट इत्यादिप्रत्यक्षेण प्रमाणदृष्टत्वानुमानेन विश्वं सत्यमित्यागमेन च विरुद्धत्वाद्दुष्टमित्यर्थः ॥ आगमोऽपीति । ईश्वरैकत्वसाधकशैवाद्यागमोऽपि द्वैतागमविरुद्धत्वाद्दुष्ट इत्यर्थः । भंगुरं अनित्यं । क्षणिकं क्षणमात्रावस्थायि । शुद्धस्यैव निर्विशेषस्यैव । एतदनुमानस्य पूर्वमनुक्तत्वादुक्तसरूपेत्युक्तं । उक्तानुमानसदृशेत्यर्थः । मुक्तस्य अद्वितीयत्वनिराकरणपरत्वेनोक्तसादृश्यं द्रष्टव्यं ॥ पूर्ववदिति । कथमुक्तमोक्षस्वरूपमप्रामाणिकमिति चेत् । न तावदत्र प्रत्यक्षमस्ति । नाप्यागमः । तदीयागमस्यास्माभिः प्रामाण्यानंगीकारात्। वेदादेश्च प्रमाणतया परेणानंगीकृतत्वादित्येव जिनाद्यभिमतमोक्ष इवात्र प्रत्यक्षागमयोरभावादित्यर्थः। अस्मदुक्तं अस्मदुक्तं प्रमेयं ॥ साधनोपादानेति । स्रक्चंदनादिरूपसुखसाधनेत्यर्थः ॥ एषा कल्पनेति । सुखस्यानादित्वे प्रमितत्वेऽव्यक्तत्वान्न प्रतिभास इति कल्पना । तत्प्रतीतेरनादित्वे विषयविषयिभावः प्रतिबद्ध्यत इति कल्पना च

युक्तेत्यर्थः । अर्थालोचनं अर्थसन्निकर्षः । सिद्धांती शंकते ॥ दुःखनिवृत्तिरिति । स्वयमेवेति शेषः ॥ सोपाधिकत्वा-
दिति । स्रक् चंदनादिवत्सुखार्थमर्थ्यत्वादित्यर्थः । सुखार्थमेव दुःखाभावो मृग्यत इत्येतदुपपादयति ॥ सुखमिति
॥विपर्ययस्यापीति । सुखमपि न पुरुषार्थः । तदीयपुरुषार्थत्वस्यापि सोपाधिकत्वाद्दुःखनिवृत्त्यर्थत्वादित्यर्थः । दुःख-
निवृत्त्यर्थमेव सुखं मृग्यत इत्येतदुपपादयति ॥ भोजनादिसुखे सत्येवेति । यदुक्तं सुखं दुःखाभावार्थं मृग्यत इति
तस्य पुरुषार्थत्वं सोपाधिकमिति पुनः सिद्धांती शंकते ॥ क्वचिदिति । परदाराभिगमनादावित्यर्थः । तर्हि सुखार्थमेव
दुःखाभावो मृग्यत इति दुःखनिवृत्तेरपि पुरुषार्थत्वं सोपाधिकमिति यदुक्तं तदप्ययुक्तमित्याह ॥ दुःखनिवृत्तेरपीति ।
शिरसि गुरुतरकाष्ठभारपरिश्रांतस्तं परित्यजति यदा तदेत्यर्थः । पुनः सिद्धांती शंकते ॥ दुःखनिवृत्तिरिति । ताव-
दिति । काष्ठभारं त्यजतः पुरुषस्येत्यर्थः ।तथाच सुखाभावेऽपीष्यमाणत्वादित्ययुक्तमिति भावः ॥ तत्रापीति । परदारा-
भिगमनस्थलेऽपीत्यर्थः । तथाच दुःखनिवृत्त्यभावेऽपि सुखस्येष्यमाणत्वादित्युक्तमयुक्तमिति भावः । कथमनयोः परस्पर-
निरपेक्षपुरुषार्थत्वमित्यत आह ॥ इच्छाया इति । कदाचित्सुखमेव मे स्यादित्येवेच्छा भवति । कदाचिद्दुःखमेव मना-
गपि माभूदित्येवमिच्छयोरसंकीर्णसुखदुःखाभावविषयकत्वानुभवादित्यर्थः । पुनः सिद्धांती शंकते ॥ भवतीति । स्वरू
पसद्दुःखहानेः पुरुषार्थत्वे बाधकमाह ॥ न हि विषयादिजन्येति ॥ दर्शनादिति । तथाच तत्राननुभूयमानाया अपि
दुःखहानेः पुरुषार्थत्वदर्शनान्मुक्तावप्येवमेवेत्यर्थः ॥ अविरोधादिति । दुःखनिवृत्तेरिति शेषः । पुत्रादिवियोगवाञ्छिः

पुरुषैरर्थ्यत्वं तावदस्त्येवेत्यर्थः । एतद्दृष्टांतेनोपपादयति ॥ न हि परदारेष्विति । कामः काम्यं सुखं । पुरुषार्थो नेति न हीत्यन्वयः । पुरुषैरर्थ्यत्वं तावदस्त्येवैवं प्रकृतेऽपीत्यर्थः । ननु यथाकथंचित्सुखस्य पुरुषार्थत्वे परदाराभिगमनादौ कुतो न प्रवर्तेत इति पृच्छति ॥ अपि त्विति । उत्तरमाह ॥ अल्पीय इति । अनर्थः ऐहिकः पारत्रिकश्च । प्रवृत्तस्याल्पीयाननर्थो निवर्तेत इत्यादिरन्वयः । महीयाननर्थ इति वर्तते । कुत इत्यत उक्तं ॥ शास्त्रे गर्हितत्वादिति । विषपानादिना बुद्धिपूर्वकं देहपरित्यागस्य । नरकं चात्महत्ययेत्यादिना शास्त्रे निंदितत्वादित्यर्थः । ननु भवत्वल्पीयः सुखं महाननर्थस्तथाऽपि काममात्रस्य पुरुषैरर्थ्यत्वात्कुतस्तत्र न प्रेक्षावतां प्रवृत्तिरित्यत आह ॥ इयमेव हीति । तथात्वे प्रेक्षावत्त्वमेव व्याहन्येतेति भावः । उपसंहरति ॥ स्वरूपेणेत्यादि । नानुभूयमानत्वनिषेधनत्वमिति मात्रशब्दार्थः । पुरुषार्थतायाः दुःखनिवृत्तेरिति शेषः ॥ अत एवेति । दुःखनिवृत्तेः पुरुषार्थताया अनुभूयमानत्वं विहाय स्वरूपेणेष्यमाणतामात्रनिबंधनत्वादेवेत्यर्थः । अनुभविष्यामीत्याशयेन । तत्साधने दुःखनिवृत्तिसाधने प्रयागवारिपातादिना देहत्यागे ॥ अनुभूयमानतामात्रमिति । अतीतायाः अनागतायाः वर्तमानताया वा दुःखनिवृत्तेर्यदाकदाचिदनुभूयमानत्वमित्यर्थः ॥ दुःखनिवृत्तिसत्ताऽपीति । अपिशब्दोऽनुभूयमानत्वसमुच्चायकः । तथाच यावत्पर्यंतं दुःखनिवृत्तिसत्ताऽस्ति तावत्पर्यंतं सर्वदाऽनुभूयमानत्वं विवक्षितं वेत्यर्थः । अनागतदुःखनिवृत्त्यनुभवे निमित्तकथनं ॥ समाधिभावादिति । समाधिर्ध्यानं तज्जन्यसाक्षात्कारो वा तत्प्रभावादित्यर्थः ॥ वर्तमानाऽपीति । आत्यंतिकी दुःखनिवृत्तिरिति वर्तते ।

अचिरं कदाचित् । सुखांतमुक्त्यभिप्रायेणेदं सुखमनुभवन्नेव चरमदेहं विसृज्य मुक्तो यदा भवेदिति सा सुखांतमुक्तिस्तत्र वर्तमानाऽप्यात्यंतिकी दुःखनिवृत्तिस्तदानीमनुभूयते एव । दुःखनिवृत्तेरात्यंतिकत्वं नाम स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वरूपं द्रष्टव्यं। ननु तदानीमात्यंतिकदुःखनिवृत्तिरेव नास्ति । सुखानुभवकाले शरीरेंद्रियबुद्धिरूपाणां दुःखानामेव सत्वादिति चेन्न । अत्र दुःखशब्देन यन्मुख्यं तदेव विवक्षितं न तु दुःखापादकतया दुःखशब्दवाच्यं शरीरादि। अतो नानुपपत्तिरित्यवधेयमित्याहुः । कुत इत्यत आह ॥ सर्वदेति । तथात्वे दुःखनिवृत्तेः सदाऽनुभूयमानत्वे । ननु सर्वकालीनानुभवविषयदुःखनिवृत्तेर्निवृत्तौ विषयांतरसंचाररूपो व्यासंगो भविष्यतीत्यत आह ॥ निवृत्तेरिति। दुःखध्वंसरूपायाः दुःखनिवृत्तेरित्यर्थः ॥ तादवस्थ्यादिति । ध्वंसस्य नित्यत्वेन निवृत्त्यसंभवादित्यर्थः । तथाच विषयांतरसंचारभावस्तदवस्थ इति भावः ॥ विभागेनेति । प्राकृतं दुःखं नास्त्यप्राकृतं दुःखमस्तीति विभागेनेत्यर्थः ॥ यो दोषोभिहित इति । शरीरे सति तदाश्रयेंद्रियसद्भाव इत्यादिनेत्यर्थः ॥ अनंगीकारेति । सुखस्योत्पत्त्यनंगीकारेत्यर्थः ॥ स्वरूपत्वेनेति ।सुखस्येति वर्तते ॥यदत्रोक्तमिति। न तावन्मुक्तस्य सुखमनादीत्युपपद्यते । संसारेऽपि तत्प्रतिभासप्रसंगादिति यदुक्तमित्यर्थः । तदनिरूपणादित्युक्तदोषं परिहरति ॥ आवरणं चेति । मूर्तत्वाभावनिवारणत्वानुपपत्तिरित्युक्तमिति चेत्तत्राह ॥ न च विशदश्रुतीति । स्पष्टश्रुतिसिद्धेत्यर्थ इत्यर्थः । सुखमिव तत्प्रतीतिरप्यनादिश्चेत्किमावरणकृत्यमित्युक्तं दोषं परिहरति॥ ज्ञानस्येति उक्तदोष इति। निर्विषयायाः प्रतीतेरनुपपत्तिरित्युक्तदोष इत्यर्थः

॥ आत्मस्वरूपावाविति । सुखविषयीकरणस्य प्रतिबद्धत्वेऽपि आत्मस्वरूपविषये तस्य साक्षिरूपज्ञानस्यापि प्रतिबद्धत्वेन सविषयकत्वोपपत्त्या न निर्विषयत्वमिति भावः । मूलं व्याख्याति ॥ नैवमितीति । आत्मशब्दस्याभिप्रायमाह ॥ यद्यपीति । आत्महानं किं कालिकं हानं दैशिकं वा । आद्येऽपि किं विनाशलक्षणं स्वसंसर्गाभावो यथा स्यात्तथा करणरूपानुत्पादो वेति विकल्प्य दोषमाह ॥ विनाशलक्षणमिति ॥ नित्यत्वादिति। नित्यत्वेन विनाशलक्षणं हानमयुक्तं । नित्यत्वोक्त्याऽनादित्वं प्राप्तं । तथा चानादित्वेनोत्पादप्रसक्तेरेवाभावादनुत्पादकरणरूपं हानं न संभवतीत्यर्थः । दैशिकहानरूपो द्वितीयपक्षोऽप्ययुक्त इत्याह ॥ नापीति । परेषां मते अस्माकं मते ॥ स्वाक्रियतेति । स्वकर्मकपरित्यागरूपक्रियाविरुद्धत्वान्न संभवतीत्यर्थः ॥ असत्त्वमिति । वस्तुसत्त्वस्य प्रतीतिप्रमाणकत्वादिति भावः ॥ अस्मदादीनामिति विशेषणस्य कृत्यमाह ॥ नारदादिभिरिति । अमुक्तैरपीत्यर्थः । अपरोक्षज्ञानस्येति पदाभिप्रायमाह ॥ अस्मदादिभिश्च शास्त्रेणेति । तज्ज्ञानात् मुक्तानां ज्ञायमानत्वादित्यर्थः । अत एव परोक्षज्ञानसद्भावादेव ॥संज्ञाब्देति। तस्यापरोक्षज्ञानाभिप्रायकत्वादिति द्रष्टव्यं ॥ संख्यादिधर्माणामिति। संख्यापरिमाणपृथक्त्वसंयोगविभागरूपाणां सामान्यगुणानां मुक्तेष्वपि सद्भावादित्यर्थः ॥ साधर्मो यस्येति । तथाच विनाशाभावरूपधर्मवानित्यर्थः । अपव्रज्यते अपवर्गवान्भवति । मुक्तस्य ज्ञानहानिमाशंक्येति मैत्रेयी स्वयमेवाशंक्येत्यर्थः । मोहं मां प्रापयामास भवानत्रेति चोदितः याज्ञवल्क्यः प्रियामाहेति प्रमाणानुसारेणाह ॥ चोदित इति शेष इति। अस्य

मैत्रेय्या ज्ञानहानिमाशंक्येति । अस्य मुक्तस्य विषये मैत्रेय्या ज्ञानहानिमाशंक्य तद्विषयकशंका तया कारिता । तस्यास्ता दृशशंकामुत्पादयित्वेति यावदित्यर्थः । अत एव ज्ञाननाशाभावादेव । मद्वचनं न मे प्रेत्यसंज्ञाऽस्तीति वचनं । तदर्थकं ज्ञाननाशार्थकं ॥ एवं वचनमिति । अविनाशी वा अरेऽयमात्मेत्येवमात्मनाशाभावद्वारा ज्ञानाविनाशवचनमित्यर्थः ॥ धर्मानुच्छित्तिसिद्धाविति । ज्ञानवदानंदादिधर्माणामप्यात्मस्वरूपत्वेन तत्स्वरूपाविनाशसिद्धौ तत्स्वरूपभूतानां तेषामप्यविनाशः सिद्ध एवेत्यर्थः । नन्वानंदादिधर्मा अपि विज्ञानवदात्मस्वरूपभूता एव नोच्छिद्यंत इत्यर्थप्रतिपत्त्यर्थमिदं वाक्यमित्युक्तमप्ययुक्तं । स्वरूपाविनाशोक्त्यैव तदभिन्नानंदादिधर्माविनाशप्रतिपत्तिसंभवेनानुच्छित्तिधर्मेति वाक्यं पुनरुक्तत्वाद्व्यर्थमेवेति पूर्वोक्तमाशंक्य परिहरति ॥ ननु स्वरूपेति ॥ स्वमतेति । अस्माभिस्तेषां धर्माणामात्मस्वरूपत्वांगीकारादित्यर्थः । तर्हि तान्प्रत्यात्मस्वरूपत्वमुपपाद्यतामिति चेत्तत्राह ॥ किमिदानीमिति ॥ आत्मस्वरूपाक्रियायामिति । धर्माणामात्मस्वरूपत्वप्रतिपादनप्रकरण इत्यर्थः । इदानीं तु मोक्षप्रसंग एव प्रवृत्तोऽस्तीति भावः ॥ इतश्चैतदिति । न प्रेत्य संज्ञाऽस्तीति वाक्यमित्यर्थः । विज्ञातारमिति वाक्यप्रतिपाद्यो जीव इत्युक्तं । येनेदमिति वाक्यप्रतिपाद्यः क इत्यत आह ॥ प्रथमेति । नाखिलज्ञापको विष्णुरित्यत्रेत्यर्थः । अविरोधश्च घटपटयोरित्यन्यथाप्रतीतिपरिहारायाह ॥ अविरोधश्चेति ॥ अनुपलंभसनाथेनेति । यद्यनुपपत्तिः स्यात्तर्ह्युपलभ्येत । नोपलभ्यते । तस्मान्नास्तीत्येवं योग्यानुपलंभसहकृतेनेत्यर्थः ॥ तदविशिष्ट इति । घटमहं जानामीत्येतदनुभवसमान इत्यर्थः ॥ अत्र चेति । प्रकृते कर्तृ-

कर्मणोर्भेदांगीकार इत्यर्थः ॥ साक्ष्यनुभवेति । कर्तृकर्मणोरभेदावगाहिसाक्ष्यनुभवविरोधादित्यर्थः । अदृष्टबाधनमित्यस्य दृष्टबाधाभाव इत्यर्थः । दृष्टशब्दः प्रमाणपरः । तथाच प्रमाणविरोधरूपापवादाभाव इत्यर्थ इत्याभिप्रेत्याह ॥ अदृष्टबाधनमित्यादि । तथा चादृष्टबाधनं यत्र कर्तृकर्मणोरभेदसाधकप्रमाणविरोधो नास्ति। अभेदसाधकं प्रमाणं यत्र नास्तीति यावत् । अपवादो नास्तीति तात्पर्यं । तत्रैव विरोधः कर्तृकर्मणोरेकत्वं विरुद्धं भेद एवांगीकर्तव्य इत्यर्थः । यथाऽगुल्यग्रेणांगुल्यग्रस्पर्शनेऽसिधारयाऽसिधाराछेदे वा कर्तृकर्मणोरभेदावगाहिप्रमाणाभावाद्भेद एवांगीक्रियते । प्रकृते च कर्तृकर्मणोर्भेदांगीकारे मामहं जानामीत्यभेदसाधकप्रमाणविरोधसद्भावाद्भेदं परित्यज्याभेदोंऽगीक्रियत इति भावः ॥ अस्वातंत्र्यं चात्रेति । द्वैतमिवेति श्रुतावित्यर्थः ॥ स्वरूपमात्रमिति । भेद ईश्वराधीन इति भेदस्येश्वराधीनत्वरूपं स्वरूपमात्रमेवोक्तमित्यर्थः ॥ ततस्तस्मादिति । ततः कारणात् । तस्मादात्मैवाभूदिति वाक्यादस्य यत्र हि द्वैतमिवेति वाक्यस्य विशेषो न भवेदेकार्थत्वादित्यर्थः । ततोऽपि किमित्यत आह ॥ तथा चेति । यत्र हि द्वैतमिवेति वाक्यार्थमनुवदति । तथाच द्वैताभाव इति । यत्र त्वस्येति वाक्यार्थमनुवदति ॥ द्वैताभाव इति । तथाच यत्र त्वस्य सर्वमात्मैवाभूदित्यस्यार्थो द्वैताभाव इति ॥ केन कं पश्येदितीति। न केनापि किमपि पश्यति । इतर इतरं न पश्यतीति यावदित्यर्थः ॥ गोत्वाभाव इति । तथाच तत्सादृश्यमवगम्यत इत्यर्थः । सादृश्यस्य भेदगर्भत्वादेवमुक्तमिति ज्ञेयं ॥ किं तदिति । द्वैतमिवेत्युक्त द्वैतसदृशं किमित्यर्थः ॥ कल्पितमिति । वास्तवद्वैतसादृश्यं कल्पितं द्वैतमित्यर्थः । तस्य कल्पितद्वैतस्य ।

कालपनिकं प्रातीतिकं । तदेव द्वैतदर्शनमेव । तथाच पुनरुक्तिरिति भावः ॥ अन्यथा व्याकुर्वंत इति । वस्तुस्थिति-कथनपरत्वेनेत्यर्थः ॥ नाहृदयमिति । अभिप्रायशून्यं न भवतीत्यर्थः । असुज्ञत्वं सम्यग्ज्ञानित्वाभावः । अविवेकित्व-मिति यावत् । अपुरुषार्थत्वप्रसंगो वाऽभिप्रायः कल्प्य इत्यत्र ज्ञापकमाह ॥ यथोक्तमिति ॥ किं मुक्त्या नः प्रयोज-नमिति । मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेदिति भावः । इति चोदित इत्यस्य याज्ञवल्क्यः प्रियामाहेत्युत्तरेण संबंधो द्रष्टव्यः । नापीत्यनंतरं ज्ञानाभावस्येति शेषः । समर्थितेत्यनंतरं याज्ञवल्क्येनेत्यर्थः ॥ ❁ ॥

यदि विषसंपृक्तमधुवत् दुःखमिश्रितत्वात्सुखमनुपादेयं स्यात्तन्निवृत्तिः पुरुषार्थः स्यादिति यावत् । तर्हि सुखस्योपादेयत्वेन तान्मिश्रितत्वाद्दुःखशब्दोदितं संसारस्याप्युपादेयत्वं स्यादित्याह ॥ दुःखशबलेति । दुःखमिश्रितेत्यर्थः । दुःखं संसार उपपादयामः साधयामः ॥ समव्ययफलत्वेनेति । अनिष्टनिवृत्त्याशया प्रवृत्तस्येष्टनिवृत्त्यापत्त्या समव्ययफलत्वमि-त्यर्थः ॥ विनिगमन इति । दुःखमिश्रितत्वेन सुखस्यापुरुषार्थत्वे सुखमिश्रितत्वेन दुःखस्याप्युपादेयत्वप्राप्त्या विनि-गमने कारणाभावादित्यर्थः । ब्रूमः आपादयामः । अत एवोक्तं । इष्टनिवृत्तिभयान्निवृत्त्यापत्तेरिति । दुःखोपादानप्राप्ते-श्चेति द्रष्टव्यं ॥ अंगीकृत्यैवेति । दुःखहानिसुखहान्योः साम्यमिति शेषः ॥ आयादिति । दुःखहानिरूपादायादपी-त्यर्थः । व्ययः सुखहानिरूपः । राजादय इत्यादिपदेन धनिकानां ग्रहणं । राज्यादीत्यादिपदेन धनग्रहणं ॥ दुःखहाने-नेति । राज्यपालनस्य धनसंरक्षणस्य च बहुदुःखरूपत्वादित्यर्थः ॥ मुक्तेर्निवृत्तिरेवेति । मुक्तेः सकाशान्निवृत्तिरेव

इति कृञ् धातोरकारस्य उकारे कुरु हीति जाते उतश्चेति सूत्रेण हेर्लोपे कुर्विति रूपं स्यादिति चेत्तत्राह ॥ श्रुशृणुपृकृवृभ्यश्छंदसीति । एतेभ्यो धातुभ्यः परस्य हेर्धिः स्यात् उ विकरणाभावश्चेति सूत्रार्थः । तथाच कृ अस्माल्लोटि सिपि तस्य हिभावे तस्य धिभावे उ विकरणाभावेन गुणाप्राप्तौ कृधीति छंदसि रूपमित्यर्थः ॥वैयर्थ्येनेति। स्वरूपसुखसिद्धौ सत्यां सुखाभावोपपादनाय यच्छरीरादिराहित्यमुपपादितं तद्व्यर्थमित्यर्थः। तत् शरीरादिराहित्यं । अत्र शिरःकराद्यभावे इत्यन्यथाप्रतीतिनिरासायाह ॥ शरीरादिभावमत्रेति परामृशतीति । ननु शिरःकराद्यभावस्यैव प्रकृतत्वेन शरीरादिभावस्याप्रकृतत्वात्कथमत्रेति परामर्श इत्यत उक्तं ॥ शिरःकराद्यभावो नेतीति। तथाच प्रतियोगितया शिरःकराद्यात्मकं शरीरमप्युपस्थापितं बुद्धिसंनिहितमेवेत्यर्थः। ननु मिश्रं सत्त्वं नास्तीति सत्त्वस्य कथं मिश्रत्वमुच्यते । प्रकृतिपरिणामभूतस्य सत्त्वस्य रजस्तमोभ्यामविमिश्रत्वेन प्रमितत्वात् । यथोक्तं तृतीयतात्पर्ये। तत्र सत्त्वं केवलं स्यादिति । अतो मिश्रशब्दं व्याख्याति ॥ सहचारितमिति । तथाच तयोर्मिश्रं रजस्तमोभ्यां सहचारितं सहपठितमित्यर्थः । सत्त्वगुण इति यावदित्युक्तं भवतीत्यर्थः ॥ ज्ञास्यत इति । अनेकार्थस्यापि सत्त्वशब्दस्य सत्त्वगुणपरत्वमित्यर्थः । अतो मिश्रपदमनपेक्षितमिति भावः । श्रुतिः तयोर्मिश्रमिति लिंगात्मकः शब्द इत्यर्थः। कृते च शीघ्रोपस्थापकस्य तयोर्मिश्रमिति लिंगात्मकशब्दस्य विद्यमानत्वात्तदपेक्षया विलंबेनोपस्थापकस्यात एव तदपेक्षया दुर्बलस्य प्रकरणस्यान्वेषणं न कर्तव्यमिति भावः । विशेषणं विशेष्येण बहुलमिति बहुलग्रहणात् मौल्यश्चते मालिनश्चेति विशेषणयोरेव समास इति द्रष्टव्यं । अत

एवास्वरसादाह ॥ यद्वेति ॥ पश्चादिनिरिरिति । मौलिमाला एषां संतीति मौलिमालिनस्तेषामित्यर्थः । अनेन बहुव्रीहित्वे इनेर्वैयर्थ्यमिति शंकाऽनवकाश इति ज्ञातव्यं। अभ्रावलय इत्यनंतरं वैकुंठलोको नभस्थानीय इत्यपि द्रष्टव्यं ॥ दोषाहेतुरिति । दोषकार्यदुःखाहेतुरित्यर्थः । तेषामपि च मुक्तिगतानामिति जीवन्मुक्तानामपि परममुक्त्यनंतरमित्यर्थः ॥ देहस्य स्वरूपत्वमिति । एतदपि प्रकृत्याद्यभावोक्त्यैव प्रतीयत इत्यर्थः । तत एव स्वरूपत्वादेव । नन्वीश्वरस्याशरीरत्वेन शिरःकरादिरहितत्वात्तत्र पुरुषत्वहेतोर्व्यभिचार इत्यत आह ॥ ईश्वरादीनामिति । आदिपदेन प्रलयकालीनानां ग्रहणं । तत्रापि पुरुषत्वेन शिरःकरादियुक्तत्वसाधनान्न व्यभिचाराख्यदोष इत्यर्थः । यथाहुः । न हि पक्षे पक्षतुल्ये वा व्यभिचार इति ॥ आवयंतीति । ज्ञापयंति । आपयंति प्रापयंति साधयंतीत्यर्थः । श्रुतीनां परेऽव्यये सर्व एकीभवंतीत्यादीनां । मूले सुखार्णवं तमित्येतत् आनंदमयमात्मानमित्यस्यार्थकथनमिति ज्ञातव्यं । तथाशब्दः श्रुतिसमुच्चयार्थतया व्याख्यातः । इदानीं भोगान् भुंक्त इत्यस्य परामर्शक इत्यभिप्रेत्याह ॥ उपेत्य तथा शेष इति ।सुखार्णवं तमुपेत्येत्यर्थः । इमान् लोकान्कामान्नीत्यादिनोत्तरत्र भोगोक्तेरिति द्रष्टव्यं ॥ आत्मेति चेति । स एवोत्तमः पुरुष आत्मा जीव इत्यर्थः ॥ अन्यार्थश्चेति । यं प्राप्य जीवःस्वेन रूपेणाभिनिष्पद्यते स एष आत्मेति परमात्माऽर्थश्च परामर्श इति सूत्रार्थः । अनुमाऽपीति प्रतीकग्रहणं । तद्योजयति ॥ मुक्तावपीति । अनुमा इत्युद्दिश्य प्रमाणत्वविधाने प्रमाणानीति स्यादतोवेदाः प्रमाणमितिवत् प्रमाणमित्यनूद्यानुमा इत्येतद्विधेयमिति भावेनाह ॥ अनुमा इति योजनेति । ये प्रागिति संसारे जीवेश्वर-

योरत्यंतभेदः मुक्तौ त्वभेद इत्येकं मतं संसारे जीवेश्वरयोर्भेदाभेदौ मुक्तौ त्वत्यंताभेद इत्यपरं मतं । जीवेश्वरयो- र्भेदाभेदौ मुक्तौ त्वत्यंताभेद इत्यपरं मतं । जीवेश्वरयोः संसारे भेदाभेदौ मुक्तावपि भेदाभेदावेवेत्यन्यन्मतमिति भास्कराणां मतत्रयसद्भावादिति ज्ञेयं । परत्वं परमात्माभेदः । ननु ये भास्करैकदेशिनः संसारे जीवेश्वर- योर्भेदाभेदावुपेत्य मुक्तावत्यंताभेदमाहुस्तेषां मते दृष्टांतभूते संसारकाले साध्यवैकल्यं स्यात् । जीवस्य यत्परेणैक्यं तद्युक्तत्वस्यैव सत्वादित्यत आह ॥ ये प्राग्भेदाभेदावुपेत्येति । तथाच जीवस्य यत्परेणैक्यं तद्युतो न भवतीति व्याख्येयं । तथाच संसारकाले भेदाभेदसद्भावेनात्यंतैक्ययुतत्वाभावरूपसाध्यसद्भावान्न साध्यवैकल्यरूपदृष्टांतदोष इत्यर्थः । ननु जीवशब्दस्य चैतन्यमात्रपरत्वे भास्करमते जीवचैतन्यस्यापरिच्छिन्नत्वेनोपाध्यनवच्छिन्नजीवचैतन्य- स्यापि जीवशब्देन प्राप्त्या जीवस्य परेण ब्रह्मणा यदत्यंतैक्यं तद्युतत्वमेव संसारकालेऽप्यस्तीति साध्यवैकल्यं स्यादित्यत आह ॥ जीवशब्दश्चेति ॥ निष्कृष्टेति । देहेंद्रियाद्युपाधिपरिच्छिन्नचेतनांशो निष्कृष्टव्यक्तिशब्दार्थः । तथाच परि- च्छिन्नचेतनांशरूपव्यक्तेर्ब्रह्मांशत्वेनांशिना परब्रह्मणा भेदाभेदसद्भावाद्दृष्टांतभूते संसारकालेऽपि जीवस्य यत्परैक्यं परिच्छिन्न- चेतनांशरूपव्यक्तिविशेषस्य यत्परब्रह्मणाऽत्यंतैक्यं तद्युतत्वाभावोऽस्तीति न दृष्टांते साध्यवैकल्यमित्यर्थः । न चैवं सिद्ध- साधनता । उपाधिपरिच्छिन्नस्य चेतनांशस्य परेणात्यंताभेदानंगीकारेणात्यंतैक्यं तद्युतत्वाभावस्य सिद्धत्वादिति वाच्यं । यः पूर्वमुपाधिपरिच्छिन्न आसीत्तस्यैव चेतनांशस्योपाध्यपगमानंतरं यत्परेणात्यंतैक्यमुच्यते मुक्तौ भास्करेण तद्युतो न

भवतीति । न चैतत्सिद्धमिति न सिद्धसाधनतेति द्रष्टव्यं ॥ व्याख्यानं कर्तव्यमिति । जीवो न कालांतरेऽपि ब्रह्मणैक्यमापत्स्यते । प्राक् ततो न भवेदित्येव व्याख्येयं । ये तु संसारे भेदाभेदावुपेत्य मुक्तावत्यंताभेदमाहुस्तान् प्रति नैवेत्यवधारणसाहित्येन व्याख्येयं । अत्यंताभेदस्तु तदर्थ इति भेद इति भावः । ननु क्षीरत्वावस्थायां यत्क्षीरं येन वस्त्वंतरेण दध्ना एकीभूतं न भवति तत्क्षीरं कुतश्चन आतंचनादेः कारणात् पश्चाद्दध्यासेति क्षीरे व्यभिचार इत्यत उक्तं ॥ सतेति । वस्त्वंतरस्य दध्नः क्षीरतादशायामभावादित्यर्थः । दध्नोऽपि कारणात्मना क्षीरे सत्वात्पुनः क्षीरे व्यभिचार इत्यत उक्तं ॥ वस्त्वंतरेणेति । अनेन सतोर्द्वयोर्मध्य इति विशेषणं देयमिति सूचितं भवति । तथाच सतोर्मध्ये यत्पूर्वं यन्न भवति तत्पश्चादपि तन्न भवतीति व्याप्तिर्विवक्षिताऽतो न क्षीरे व्यभिचार इति भावः । सता वस्त्वंतरेणेति विशेषणदानेन क्षीरादौ व्यभिचारः परिहृत इति स्वयमेव दर्शयति ॥ एतेनेति । शंकते ॥ कुत इत्यादिना । कुत इत्यनंतरं मुक्तिं नैतीति वर्तते । सोऽश्नुते इत्याद्युदाहृतवचनाविरोधस्तावदस्मन्मते नास्तीत्युपपादयति ॥ उदाहृतेति ॥ आद्यस्येति । मोक्षकाले जीवस्य यत्परेणैक्यं तद्युतो न भवतीति साधने संसारकाले भेदाभेदांगीकारेण दृष्टांते साध्यवैकल्यापत्त्याऽस्मान्प्रत्यासिद्धव्यापकत्वादित्यर्थः ॥ अनङ्गतस्येति । पूर्वमत्यंताभेदशून्यस्य तदत्यंताभेदानिरासहेतोः प्राक् ततोऽत्यंताभिन्नत्वादित्यस्येत्यर्थः । जीवो न कालांतरे ब्रह्मणाऽत्यंतैक्यं नापत्स्यते । प्राक् ततोऽत्यंताभिन्नत्वादित्यनुमानस्य सिद्धसाधनता ।

मुक्तौ भेदाभेदांगीकारात् । संसारेऽपि भेदाभेदांगीकारेण प्राक् ततोऽत्यंतभिन्नत्वहेतोः स्वरूपासिद्धिश्च स्यादित्यपि द्रष्टव्यं। कानिचित् बौद्धमतानि। प्रसक्त्यप्रसक्त्यागतं प्रसंगाप्रसंगाभ्यामागतमर्थं। सुविदिते प्रमेयेऽज्ञानविपर्ययाविति संबंधः ॥ वयमेवेत्यादि। शून्यवाद्याद्युक्तप्रकारेणेत्यर्थः तेभ्यो वैदिकबुद्धिरहितेभ्यः ॥ ❀ ॥ ❀ ॥ पूर्वपादद्वयेति। तृतीयाध्यायस्यांत्यश्चतुर्थः पादः। चतुर्थाध्यायस्य यः प्रथमः पादस्तद्वये पूर्वपक्षसिद्धांतयुक्तयुक्तिपूर्वकमित्यर्थः ॥ करणसाधन इति। विपक्षः पूर्वपक्षः संप्राप्यते एभिरिति पक्षसंप्रापयः विपक्षसंपादका इत्यर्थः। निरंतरातीतपादे अव्यवधानेनातीतपादे। एतदध्यायस्य प्रथमपाद इत्यर्थः ॥ अनुस्त्रियंत इति। पूर्वपक्षानुसरणकरणीभूता युक्तय इत्यर्थः ॥ विशिष्टहेतव इति ॥ ॐ नैकस्मिन्दर्शयतो हि ॐ ॥ पूर्वपक्षे हेत्वपेक्षया विलक्षणहेतव इत्यर्थः ॥ ❀ ॥ श्रुती महोपनिषच्चतुर्वेदशिखे। अत एवास्वरसात्। अशेषजीवाः समस्तजीवा इति कर्तृवाचकपदद्वयसार्थक्याय समस्तजीवा इत्यस्य हरौ लयं यांतीति क्रियापदस्यैकस्य सद्भावादशेषजीवा इत्यस्यैकं क्रियापदमध्याहरति ॥ यद्वेति ॥ ४।२।५ ॥ ❀ ॥ ॥ ॐ तानिपरे तथा ह्याह ॐ ॥ अस्यैवेति। तस्मिन् लयं यांतीति श्लोकद्वयोक्तस्यैव विवरणं सोमस्तु वारीशयुत इत्यादिना वाक्यजातेन क्रियत इत्यर्थः ॥ द्वौ मार्गाविति। शेषगरुडमार्गौ ब्रह्मांडाद्बहिरेवेति ज्ञातव्यं ॥ इंद्रादिचतुष्टय इति। वायाविंद्रः सोम आदित्यो बृहस्पतीरिति वाक्योक्तेंद्रादिचतुष्टयमध्ये सोमस्य वायुप्रवेशे निर्णयःकृतः। भूतेषु मध्ये अपां वायुप्रवेशे निर्णय इत्यर्थः ॥ एतत्पर्यायेति। उमागिरीशपर्यायाणां पार्वतीशंकरादिशब्दानां

भारतीवायुपर्यायाणां विद्युत्प्राणादिशब्दानामित्यर्थः ॥ एकद्रव्येति । देवानां जीवस्वरूपैकद्रव्येत्यर्थः । भूतेषु मध्ये तेजसोऽग्नेः । यस्मिन्काले इंद्रप्रवेशः कथ्यते तदा तस्मिन्काले एव इंद्र उमायामित्यत्रोमाशब्देन सुपर्णपत्नी उक्ता । नान्यदेत्येवं प्रतीतिनिरासायाह ॥ आधिकरणमात्रस्येति । न तु कालरूपाधिकरणस्येत्यर्थः । तदेवदर्शयति ॥ यत्र श्रुताविति । तथाच यदा यत्र श्रुतौ तदा तत्र श्रुतावित्यर्थो द्रष्टव्यः । उमाशब्दस्य सुपर्णपत्न्यां प्रवृत्तौ गिरिशनाम्नः सुपर्णे प्रवृत्तौ च किं निमित्तमित्यत आह ॥ अत्र पदसादृश्यमिति । उमासुपर्णीपदयोर्गिरिशसुपर्णपदयोश्च साम्यं प्रवृत्तिनिमित्तमित्यर्थः । नन्वत्र सुपर्णपत्नीपर्यंतमेव लय उक्तो न तु तस्या अन्यत्र लयोऽतो न्यूनतेत्यत आह ॥ सुपर्णपत्न्या इति । ननु शक्रसहितेन सुपर्णपत्नीमिति पूर्ववाक्येनैवेंद्रस्य सुपर्णपत्न्यां लय उक्त एवास्त्यत एतेन सुपर्णपत्नीमिति पुनः किमर्थमुच्यत इत्यत आह ॥ इंद्रपर्यंतमेवेति ॥ उभयत्रेति । विशंतीत्येतत् सुपर्णपत्नीमहेंद्रमित्युभयत्र संबद्ध्यत इत्यर्थः । भूतेषु वायोर्लयानुक्तेराह ॥ वायुभूतस्येति । भूतवायोरित्यर्थः । एतेन शिष्टा इत्यनेन ॥ विषयो दर्शित इति । अग्नौ सर्वे देवा विलीयंत इत्यत्र सर्वदेवशब्देन अग्नावग्नय इति महोपनिषदि अग्नयस्तेजसीति चतुर्वेदशिखायां च प्रधानाग्नौ लीयमानत्वेन ये निर्दिष्टा एकोनपंचाशदग्नयस्त एव सर्वे देवा इत्यनेन ग्राह्या इत्यर्थः । अग्नीनामनेकत्वं च त एवैकोनपंचाशत्साकं पितृपितामहैरिति भागवते प्रसिद्धं । अत एवानलकुलेंद्र इति प्रधानाग्निनाम । यथोक्तं भाष्ये । अग्नौ सर्वे देवा विलीयंत इति तत्र तत्र निर्दिष्टानामेवेति ॥ अपवादमिति ।

शिष्टा इति सामान्योक्त्या यमधर्मपितृगंधर्वादीनाप्यग्नौ लयप्राप्तेस्तदपवादमाहेत्यर्थः ॥ उक्तानुगुण इति । यस्य यस्मिन् लयस्तस्य तस्मादुत्पत्तिरित्येव श्रुत्यादिसिद्ध इत्यर्थः ॥ लय एव मुक्तिरिति । न हि प्रलये भोगोऽस्तीति भावः ॥ देहहानिलक्षणा मुक्तिरिति । मुक्तिरत्रेत्यर्थः ॥ सर्वाऽपीति । मुक्तिरित्यर्थः । कर्मक्षयस्तथोत्क्रांतिर्मार्गो भोगश्चेति चतुष्टयमिति मुक्तेश्चातुर्विध्यस्य प्रतिपादित्वादित्यर्थः ॥ इयमित्युक्तमिति । लयो यतो मुक्तिरियं सुराणामित्यत्र इयं मुक्तिर्लय इति विशिष्योक्त्या भोगादिरूपा सर्वा मुक्तिर्लयरूपेति लभ्यतेऽतो न पूर्वोत्तर विरोध इति भावः ॥ नोक्तविरोध इति । प्राणस्तेजसीति श्रुतिविरोधो नेत्यर्थः ॥ एवमपीति । ब्रह्मविदोऽपि वायोर्हिरण्यगर्भत्वेन पुनर्जननांगीकार इत्यर्थः ॥ अपवादमिति । शिष्टा इति सामान्योक्तेर्निर्ऋतिमरुद्गणपार्षदानामपि अग्नौ लयप्राप्तेरपवादमाहेत्यर्थः । वर्णाश्रमाचारेत्यादिना गंधर्वपितृगंधर्वादिविषयेऽपवादस्योक्तत्वादपवादांतरमित्युक्तं ॥ अत एवेति । तुरश्रुत्युक्तत्वादेवेत्यर्थः । यद्यप्ययमपवादो वर्णाश्रमाचारेत्याद्यनंतरं तत्रैव वक्तव्यो न तु व्यवधानेनात्र । तथाऽपि तत्रोक्तं समस्तं परमश्रुतौ हि प्रोक्तमित्युच्यते । प्रयाति धर्ममित्यादिप्रमेयं परमश्रुतौ नोक्तं किंतु तुरश्रुतावेवातो व्यवधानेनोक्तमित्यर्थः ॥ ४ । २ । ७ ॥ ❁ ॥ ॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽध्वतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य द्वितीयः पादः समाप्तः ॥ ४ ॥ २ ॥ ❁ ॥ ❁ ॥



श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ ॥ ॐ प्रतीकालंबनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ ॥ तं विष्णुमिति । वैकुंठादिस्थितं विष्णुमाप्य स्थिता अपीत्यर्थः ॥ परांतकाले । परं ब्रह्मायुस्तदंतकाले प्रलयकाल इत्यर्थः । तस्माद्विष्णोरिति तल्लोकादित्यर्थः ॥ हरिमिति । लिंगभंगानंतरं वासुदेवं गता भवंतीत्यर्थः । आनंदमानं- दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे। एतां गतिं भागवतो य इत्यादिवचनैर्वासुदेवप्रवेशस्यैव मुक्तित्वावगमादिति ज्ञातव्यं ॥ उक्तं च भगवत्पादैः ॥ इत्थं विचिंत्य परमः स तु वासुदेवनामा बभूव निजमुक्तिपदप्रदातेति ॥ ❁॥ ४ । ३ । ६ ॥❁॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य तृतीयः पादः समाप्तः ॥ ४-३ ॥



श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥ ॐ अत एव चानन्याधिपतिः ॐ ॥ अवंध्यसंकल्पत्वादिति । सर्वथापति-शून्यो भविष्यामीति संकल्पवत्त्वादिति भावः ॥ अनन्यभृत्यत्वमिति । अन्योऽधिपतिरस्य नास्तीत्युक्तेऽयमन्यभृत्यो न भवतीति लब्धमित्यर्थः । इति विशेषार्थ इति संबंधः ॥ उदाहृतश्रुत्यर्थ इति । न केवलं मनुष्याणामीशानः किंत्वमृतत्वस्यामरवर्गस्य देवताजातस्यापीशान इत्यर्थसंभवेन मुक्तनियामकत्वस्य तदर्थत्वाभावादिति भावः ॥ अनुमैवेति । मास्तु श्रुतिरिति भावः ॥ विकारावर्ति चेति । चशब्दान्नञः समाकर्षः । विकारावर्तिव्यापारो मुक्तानां न विद्यत इत्यर्थः । अनेन देवे न तथाऽमुना च देवे न परावाक्तनलोकिनामीष्ट इत्यत्र यथायोगं संबंधो न यथाक्रमामित्याह ॥ अत्रामुनेति । सोऽमुनैवेत्यत्र तच्छब्दो ज्ञानिपरामर्शक इति दर्शयितुमथ य एवं विद्वानित्याद्यामित्युक्तं ॥ वक्ष्यमाणयुक्त्येति । नान्यं तु युक्तिमेतीति वक्ष्यमाणेत्यर्थः ॥ अनवधिकमिति । अधिकारिवर्ग इति शेषः ॥ उक्तश्रुतेरेवेति । तुरश्रुतेरेवेत्यर्थः । अमुक्ताः पूजकाः किं न स्युरित्यत आह ॥ अमुक्तानामिति ॥ निवारितत्वादिति । न प्रेत्य संज्ञाऽस्तीति श्रुत्येत्यर्थः। अमुक्तानां मुक्तविषयकज्ञानस्यैवाभावे तत्पूजकत्वस्यैवायोगादिति भावः ॥ संबंधास्त्विति । तत्रस्थरूप इत्यर्थः ॥ शब्दशक्तिजैरिति । लोकस्तु भुवने जन इत्यभिधानादिति भावः ॥ तद्विवक्षयेति । जनाविवक्षयेत्यर्थः । कुतः । प्रमाणात् ॥ तावताऽपीष्टासिद्धिरिति । जनाविवक्षाज्ञापकसद्भावमात्रेणापि भवतामिष्टसिद्धिर्न भवतीत्यर्थः । कथमित्यत आह ॥ मुक्तविषयतायामिति । तथा च न लोक-

शब्दोक्तजनानां मुक्तत्वमित्यर्थः । इदमेव च भवतामिष्टं तन्न सिद्धमिति भावः । अस्तु वा मुक्तविषयकत्वं तथाऽपि भवदिष्टं तन्नियमनमत्रोच्यत इत्याह ॥ आप्तिरेवेति ॥ पैंगिश्रुतिरस्तीति । सा चात्र न पठिताऽन्यत्र द्रष्टव्येति भावः ॥ यद्यपीति । मुक्तो लोकान् जनानाप्नोतीति नियमनं तावदुक्तं मुक्तानाममुक्तनियमनस्य निषिद्धत्वात्तदन्यथाऽनुपपत्त्या मुक्तनियमनमेवात्रोच्यत इत्येवमस्य वाक्यस्य मुक्तविषयकत्वं मुक्तस्य विकारावर्तिव्यापारनिषेधादेव सिद्धमिति नैतच्छ्रुतिव्याख्यानरूपपैंगिश्रुत्युदाहरणं कर्तव्यमित्यर्थः ॥ लक्षणापक्ष इति । लोकशब्दस्य तत्रस्थेषु पुरुषेषु लक्षणेति पक्ष इत्यर्थः ॥ बाधकं चेति । जडभूतलोकनियामकत्वरूपामुख्यार्थांगीकारो न युक्तः । लोकानां विकारत्वेन मुक्तानां विकारावर्तिव्यापारस्य निषिद्धत्वाद्वा तद्वास्तु मुक्ता इह लोक इत्याद्यर्थे पैंगिश्रुतिसद्भावेन मुख्यार्थांगीकारे तद्बाधापत्तेरिति बाधकं चोक्तं भवतीत्यर्थः ॥ संहितायामिति । संध्युच्चारणकाल इत्यर्थः ॥ लोकतेरिति । लोकृ दर्शन इति धातोरित्यर्थः । नंदिग्रहिपचादिभ्य इति सूत्रेण कर्त्तर्यच्प्रत्यय इत्यवधेयम् । कर्त्रर्थकाच्प्रत्यये सति निष्पन्नो लोकशब्दः प्रकाशवत्त्वमेवाह न तु प्रकाशरूपत्वं । तथाऽपि मुक्तानां प्रकाशो न तद्भिन्न इत्याशयेन प्रकाशरूपा इत्युक्तमित्यवधेयं । मुक्तानां नीचानां ॥ उक्तामिति । लोकाधिपत्यं च विधातुरेवेत्युक्तमित्यर्थः । विदुषो ज्ञानिनः । अमुक्तस्य समुक्तं सम्यगुक्तं ॥ निराकरोतीति । लोकाधिपत्यं रविबिंबचक्षुरंतर्गतभगवद्धर्मत्वेनोक्तमस्ति तज्ज्ञानिनः फलत्वेन वक्तुं न युक्तमित्येवं निराकरोतीत्यर्थः । प्रकृत्य अधिकृत्य । अक्षिगतं प्रकृत्येति वर्तते ॥ नित्यत्वावगमादिति । तथा च स्वीयं

परित्यज्य ददातीति वक्तुं न शक्यत इत्यर्थः ॥ अत एवेति । सर्वपापक्षयलिंगविरोधादेवेत्यर्थः ॥ न द्वितीय इति । अवांतरेश्वरस्य सर्वलोकाधिपत्यं न युज्यते । तस्मिन्सर्वपापक्षयरूपलिंगस्य बाधितत्वादिति भावः । हिरण्यगर्भे । अवांतरेश्वरभूते । उदेति ह वै सर्वेभ्यः पाप्मभ्य इति श्रुतौ पाप्मशब्देन प्रकृतिबंधादिसर्वाशुभमेव विवक्षितं न संकोच इत्यभिप्रेत्योपपादयति ॥ तस्योदेति नामेत्यादिना । सर्वमप्यशुभं प्रकृतिबंधादिरूपं ॥ फलमुच्यत इति । इदं चामुक्ते ज्ञानिनि हिरण्यगर्भे न संभवतीत्याशयः ॥ क्रियेति । इत्यादि यथा स्यात्तथोक्त इति उक्तरूपक्रियाविशेषणमित्यर्थः । अन्यथा इत्यादिनेति वक्तव्यत्वादिति भावः ॥ प्रत्ययांतरेति । तल प्रत्ययेत्यर्थः । तस्य भावस्त्वतलाविति सूत्रादित्यर्थः । तथा च त्वप्रत्ययं चशब्दात्तत्समानार्थकं तल्प्रत्ययमपिशब्दाद्रूपेणेतिपदं चातिहाय प्रवृत्तायामिह श्रुतौ । तेन अमुना । अनेन । रूपेणेत्यर्थो न भवेदिति मूलार्थो द्रष्टव्यः । प्रत्ययः । त्वतलोरन्यतरः प्रत्ययः । अपिशब्दसमुच्चेयमर्थं दर्शयति ॥ यदि चेति । रूपेणेत्यस्यार्थः ॥ आत्मनेति । अमुख्यतादात्म्यं प्राप्येत्यर्थः । अनेन रूपेणेत्यस्यार्थः ॥ आत्मनेति । अस्य तादात्म्यं प्राप्येत्यर्थः । नन्वयं विद्वानसौ परमात्मा भवतीत्युक्तौ तादात्म्यमेव प्राप्तं न तु सर्वलोकाधिपत्यरूपस्तद्धर्मोऽतस्तत्प्रतिपादनाय सोऽमुनैवेत्यादिकं सार्थकमित्यत आह ॥ तादात्म्यप्राप्ताविति। ताद्धर्म्यस्य । तद्धर्मवत्त्वस्येत्यर्थः ॥ न विदुष इति । विशिष्टयोरैक्यायोगादिति भावः ॥ परमेणापीति । तथात्वे तत्त्वमस्यादिवाक्ये चिन्मात्रलक्षणा

न क्रियेतेति भावः ॥ आदित्यादिपरिच्छेदेति । निर्गुणस्यापरिच्छिन्नत्वेनादित्यचक्षूरूपपरिच्छिन्नस्थानास्थितत्वमत्रोच्यमानमनुपपन्नमित्यर्थः ॥ ऐश्वर्येति । निर्गुणस्य लोकाधिपत्यादिरूपैश्वर्यस्य पूर्ववाक्योक्तस्यासंभवादित्यर्थः । तद्रूपं निर्गुणब्रह्मभावं ॥ अपव्याख्यानेति । अनन्याधिपतिरित्यस्य नास्यान्योपाधिर्भवतीति परकृतापव्याख्यानेत्यर्थः । न तु पूर्वं मुक्तस्वकीयावरयंतृताऽस्तीत्युक्तं । अत्र जगद्व्यापृतिमंत इत्युच्यते । तत्र जगच्छब्देन स्वावरामुक्तनियामकत्वस्यापि प्राप्त्या विकारावर्तिं चेत्युक्तविरोधः स्यादित्यत आह ॥ जगच्छब्देनेति । ननु स्वकीयावरमुक्तविषयकनियमनादिरूपव्यापृत्यंगीकारेऽपि जगद्व्यापारवर्जमिति सूत्रविरोधः स्यात् । तत्र मुक्तामुक्तजगद्व्यापारमात्रप्रतिषेधादित्यत आह ॥ जगद्व्यापारवर्जमित्येतादिति ॥ अनेनेति । जगद्व्यापृतिमंत इति वचनेनेत्यर्थः । कथमनेन तत्सूचनमित्यत आह ॥ अन्यथेति । सूत्रविरोधपरिहारसूचनस्यानभिप्रेतत्व इत्यर्थः । स्वावरमुक्तनियामका एवेत्यवक्ष्यदिति । न तु जगद्व्यापृतिमंत इतीत्यर्थः ॥ अयं भावः ॥ पूर्वं मुक्तस्वकीयावरनियंतृताऽस्तीत्युक्तत्वात्संक्षेपतः पदार्थकथनसमयेऽपि तदनुसारेण स्वावरमुक्तनियामका एवेति स्पष्टमेव वक्तव्यं न तु जगद्व्यापृतिमंत इति । तेन ज्ञायते जगच्छब्द उक्तरीत्या स्वकीयावरमुक्तपरः । जगद्व्यापारवर्जमिति प्रतिषेधस्तु मुक्तेतरजगद्विषय इति । तथा चोपक्रमे मुक्तस्वावरनियामकत्वमुक्तमुपसंहारे च जगद्व्यापृतिमंत इति । सूत्रे च जगद्व्यापृतिः प्रतिषिद्धा । एतत्त्रयान्यथाऽनुपपत्त्या ज्ञायते । उपसंहारे जगच्छब्द उपक्रमानुसारेण स्वावरमुक्तपरः सौत्रो जगच्छब्दोऽमुक्तपर इति प्रतिपत्तव्यमिति । केचित्तु अन्यथेत्यस्य

जगद्व्याप्तिमंत इत्यत्र जगच्छब्देन स्वकीयावरमुक्तानामग्रहण इत्यर्थः ॥ स्वावरेति । उपक्रमे मुक्तस्वकीयावरयंतृताया उक्तत्वादुपसंहारेऽपि तथैव वक्तव्यमित्यर्थ इत्याहुः ॥ तथा चेति । मुक्तस्वकीयावरयंतृत्वे सिद्धे सतीत्यर्थः ॥ उक्तार्थमेवेति । अनन्यभृत्यत्वमिहोदितेभ्य इत्युक्तप्रकारेणेत्यर्थः । अजादिति ल्यब्लोपनिमित्ता पंचमीत्याभिप्रेत्य व्याचष्टे ॥तमेवेहायेति। तत्समीप इत्यर्थः ॥ ४ । ४ । ७ ॥ प्रधानाश्रयाय मुख्याश्रयाय। एके मुख्यान्यकेवला इत्यभिधानात् संख्यार्थत्वे पूर्वनिपातः स्यादित्यवधेयं ॥ अनुकंपादिति । मनसा चान्यदाकांक्षादित्यत्राकांक्षादिति घञंत इति उपासनापादे टीकाकारैरुक्तत्वात्तद्वदनुकंपादिति शब्दो घञंतो द्रष्टव्यः । घञंताश्च पुल्लिंगा इति भावः ॥ तृन इति । दातृशब्दस्य तृनंतत्वादित्यर्थः । गुणैकधाम्न इति सद्गुणत्वस्योक्तत्वात्पुनरुक्तिरित्यत आह ॥ सद्गुणानुवादेनेति । बुद्ध्या विवेकेनेति भावः ॥ तादात्म्यं चेति । भगवद्गुणानामेव निरुपाधिकप्रीतिविषयत्वं प्राप्तं न भगवत इत्याशंकाऽप्यनेन परिहृता । गुणानां निरुपाधिकप्रीतिविषयत्वे भगवत एव तत्प्राप्तं तदभेदादिति द्रष्टव्यं ॥ केशवे विषय इति । तस्य गुणपूर्णत्वानिर्दोषत्वज्ञेयत्वगम्यत्वप्रतिपादको ग्रंथः कृत इत्यर्थः ॥ अतच्प्रत्यय इति । दृशिर् प्रेक्षण इत्यस्मादतच्प्रत्यये हलंत्यमिति चकारलोपे दृश्यतेति जाते ऋवर्णस्य गुणे तस्य च रपरत्वे दर्शतेति रूपं । बलवाची वबयोरभेदादिति भावः। गत्यर्थः । अयपयगताविति धातोरित्यर्थः ॥ तत उणिति । अय् धातोरुण्प्रत्यये णित्वादादिवृद्धौ आयुरिति भवतीत्यर्थः ॥ किंचेति । कीदृशं तन्मूलरूपमिति शंकायां विशेषणांतरमुच्यत इत्यर्थः

॥ भरणेति । वायोर्जगद्धारणकर्तृत्वं च सप्तमस्कंधगते । लोकान्यो बिभर्ति महाबलः । वायुना वै गौतमसूत्रेणेत्यादि श्रुतिसिद्धमिति द्रष्टव्यं । गम्लृ ज्ञानं तत्कर्तृत्वं नाम ज्ञातृत्वं तथा च सर्वज्ञमित्यर्थः ॥ आभ्यामसुन्प्रत्यय इति। भृञ् भरणे गम्लृ गतौ आभ्यामसुन्प्रत्यय उन् इत्यस्य लोपे तस्य ङित्कार्यकारित्वात्तस्मिन् परतो गमेष्टिभूतस्याम् इत्यस्य लोपे भृधातोर्ऋवर्णस्य गुणे तस्य च रपरत्वे सस्य रुत्वे विसर्गे च सति भर्ग इति सकारांतं नपुंसकमिति भावः । तथा च भर्गः भर्गसी भर्गांसीति शब्दप्रकारः ॥ वा गतीति । तथा च वा धातोः कृवापाजीत्या-द्युणादिसूत्रेण उण्प्रत्यये आतो युक्चिण्कृतोरिति सूत्रेण वा धातोः पुरतो युगागमे उक् इत्यस्य लोपे वाय् उ वायु-रिति रूपं । ननु भर्ग इत्येतत्कथं वायुशब्दव्याख्यानं । वातेर्गत्यर्थत्वेन गमनकर्तृत्वस्यैव प्राप्त्या भरणकर्तृत्वस्या-प्राप्तेरित्यत आह ॥ अनेकार्थत्वादिति । क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्श्यते । प्रयोगतोऽनुगंतव्या अनेकार्था हि धातव इति वचनादिति भावः ॥ अपि चेति । मूलरूपस्य विशेषणांतरमुच्यत इत्यर्थः ॥ वयः श्रेष्ठत्व इति । वय-धातोरुण्प्रत्यये यकारस्थाकारलोपे णित्वादुपधावृद्धौ वायुरिति रूपं ॥ इत्थमेवेति । मूलरूपवदेव बलाद्यात्मकमित्यर्थः ॥ एरजित्याजिति । इशब्दस्य षष्ठी एरिति । इवर्णांताद्धातोरकर्तरि कारकेऽच्प्रत्ययः स्यादित्यर्थः । तथाच नीत्यस्मा द्धातोः करणेऽच्प्रत्यये इकारस्य एकाररूपे गुणे तस्य अयादेशे नयमिति रूपं ॥ क्षै क्षय इत्यस्मादिति । तथा च घृतशब्दे कर्मण्युपपदे क्षै धातोः आदे च उपदेशेऽशितीति ऐकारस्य आत्वे आतोऽनुपसर्गे क इति कप्रत्यये कित्वा-

द्वात्वाकारलोपे छंदस्त्वादुपपदतकारलोपे पृक्ष इत्यकारांतं रूपं । नन्वकारांतपुंल्लिंगोऽयं पृक्षशब्दः । कथं द्वितीयवपुषो विशेषणमित्यत आह ॥ पुंल्लिंगमिति ॥ श्रुत्यनुसारेणेति । पृक्षो वपुः पितुमानिति श्रुत्यनुसारेणेत्यर्थः । अत एवा-स्वरसोहाह ॥ असुन्वा प्रत्यय इति ॥ किदिति । धात्वाकारलोपरूपकित्कार्यकारीत्यर्थः । तथा च पृच्छब्दे कर्मण्युपपदे क्षै क्षय इति धातोरसुन्प्रत्यये ऐकारस्यात्वेऽसुन् प्रत्ययस्य कित्कार्यकारित्वात्तस्मिन्परतो धात्वाकारलोपे सस्य रुत्वे विसर्गे उपपदतकारलोपे च सति पृक्ष इति संकारांतं नपुंसकमेवेदं वपुषो विशेषणं युक्तमित्यर्थः । पृक्षः पृक्षसी पृक्षांसीति शब्दाकारः ॥ वातेरिति । वागतिगंधनयोरिति धातोरवगत्यर्थाद्वा धातोर्घञर्थे कविधानमिति वार्तिकेण करणस्यापि घञर्थत्वात्करणे कप्रत्यये कित्वाकारलोपे व् अ वेति रूपं ॥ अस्येतीति । इति हेतोरेतत्तृतीयं वपुर्मध्व इति पूर्वेणान्वयो द्रष्टव्यः । ननु तर्हि मधुव इति स्यान्न तु मध्व इति उकारलोपविधायकाभावादित्यतश्छांदसोऽयमुकारलोपः । भूर्भुवःसुवरिति वक्तव्ये छांदसत्वेन यथा उकारलोपमाश्रित्य स्वरिति ऋग्वेदिनः पठंति तद्वदित्याह ॥ स्वरित्यत्रेवेति । संबोधनाभिप्रायमाह ॥ नित्यापरोक्षमिति । भूतिपदव्याख्यानव्याजेनांते मांगलिकं पदं बध्नाति ॥ भूतिर्महालक्ष्मीरिति ॥ ❁ ॥ ❁ ॥ वचनप्रसूनेति । यथा कश्चिद्भिक्षुकः पुष्पमालां विरचय्य ऐश्वर्यवंतं कंचनप्रभुं प्रति दत्त्वा चेत्सा यथा तदुपरि दयया हृदये तेन ध्रियते तद्वदित्यर्थः । महिला वनिता तथेत्यभिदानात्कमला महिला यस्यासौ कमला-महिलो लक्ष्मीपतिस्तेनेत्यर्थः । अकृषि अकार्षम् । प्रसिद्धा सुधा दिविषैर्विबुधैः सेव्यते इयं तु भौमैर्भुविष्ठैर्विबुधैर्भूसुर-

विद्वद्भिर्ब्राह्मणैः सेव्यतामित्यर्थं इत्यशेषमतिमंगलं ॥ यादवाचार्यहृत्स्थश्रीमध्वाचार्यहृदब्जगः ॥ आनंदादिगुणोद्रिक्तः प्रीयतां बादरायणः ॥ ९ ॥ वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् ॥ यादवार्यान् वरसुधाटीकाकारान् वयं नुमः ॥ २ ॥ श्रीमन्न्यायसुधाटीका यादवाचार्यनिर्मिता ॥ तत्राधृतानि वाक्यानि तान्यत्र विवृतान्यलम् ॥ ३ ॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४-४ ॥

समाप्तोऽयं ग्रंथः ॥ श्रीकृष्णार्पणमस्तु ॥ ❁ ॥

अयं ग्रंथः "कर्नाटक प्रिंटिंग वर्क्स, धारवाड" मुद्रणालये खंडो रामचंद्र भिसे इत्यनेन मुद्रापयित्वा

**सवणूरेत्युपाह्वयराघवेंद्रसूनुगोविंदाभिधेन** धारवाडग्रामे प्रकाशितः ।

विद्वद्भिर्ब्राह्मणैः सेव्यतामित्यर्थं इत्यशेषमतिमंगलं ॥ यादवाचार्यहृत्स्थश्रीमध्वाचार्यहृदब्जगः ॥ आनंदादिगुणोद्रिक्तः प्रीयतां बादरायणः ॥ १ ॥ वेदेशमुनिसत्पादसेवासंप्राप्तवैभवान् ॥ यादवार्यान् वरसुधाटीकाकारान् वयं नुमः ॥ २ ॥ श्रीमन्न्यायसुधाटीका यादवाचार्यनिर्मिता ॥ तत्राधृतानि वाक्यानि तान्यत्र विवृतान्यलम् ॥ ३ ॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽधृतसुधावाक्यार्थविवरणे चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४-४ ॥ समाप्तोऽयं ग्रंथः ॥ श्रीकृष्णार्पणमस्तु ॥ ❁ ॥

अयं ग्रंथः "कर्नाटक प्रिंटिंग वर्क्स, धारवाड" मुद्रणालये खंडो रामचंद्र भिसे इत्यनेन मुद्रापयित्वा
**सवणूरेत्युपाह्वयराघवेंद्रसूनुगोविंदाभिधेन** धारवाडग्रामे प्रकाशितः ।